विद्वान् समस्त शास्त्रार्थविचारचतुराननः ।
शिरश्चन्द्रकराकारकीर्तिव्याप्तजगत्त्रयः ॥१३॥

व्याख्यातृत्वकवित्वादिगुणहंसैकमानसः ।
सर्वज्ञशासनाकाशशरत्पार्वणचन्द्रमाः ॥१४॥

गांगेयभोजदेवादिसमस्तनृपपुङ्गवैः ।
पूजितोत्कृष्टपादारविन्दो विध्वस्तकल्मषः ॥१५॥

भव्यपद्माकरानन्दी सहस्त्रांशुरिवापरः ।
ततो गुणाकरः कीर्तिसहस्त्रोपपदो ऽजनि ॥१६॥

कर्पूरपूरोज्वलचारुकीर्तिः
सर्वोपकारोद्यतचित्तवृत्तेः ।
शिष्यः समाराधितवीरचन्द्रः
तस्य प्रसिद्धो भुवि वीरचन्द्रः ॥१७॥

सूरिश्चारित्रसूर्यस्य तस्य तत्त्वार्थवेदिनः ।
विवेकवसतिर्विद्वान् शिष्यः श्रीचन्द्रो ऽभवत् ॥१८॥

भव्यप्रार्थनया ज्ञात्वा पूर्वाचार्यकृतां कृतिम् ।
तेनायं रचितः सम्यक् कथाकोशोऽतिसुन्दरः ॥१९॥

यदत्र स्खलितं किंचित्प्रमादवशतो मम ।
तत् क्षमन्तु क्षमाशीलाः सुधियः शोधयन्तु च ॥२०॥

यावन्महीमरुन्मर्त्या मरुतो मन्दरोरगाः ।
परमेष्ठीपावनो धर्मः परमार्थपरमागमः ॥२१॥

यावत्सुराः सुराधीशः स्वर्गचन्द्रार्कतारकाः ।
तावत्काव्यमिदं स्थेयात् श्रीचन्द्रोज्वलकीर्तिमत् ॥२२॥

॥ इति श्री कथाकोशः संपूर्णः ॥